अष्टोत्तरशतं जुहुयात्। ततः तिलादि मिश्रित चरुभिः वरुणा त्र्यम्बकं मन्त्रेण १०८ आहुती दद्यात् सतिसम्भवे श्री सूक्तेनापि होमयेत् ततः आवाहित देवतानां विसर्जनं ब्राह्मण भोजनञ्च सर्वे पूर्ववत् कार्यम्।

॥ इति व्यतीपातशान्ति॥

## ॥ अथ वैधृति शान्ति॥

वैधृतिशान्ति दिवसे भद्रासनोपरि उपविश्याचम्य कंकण बन्धनादि पूर्वक स्वस्तिवाचनादिकं विधाय देवब्रह्मणञ्च नमस्कृत्य जलमदाय संकल्पं कुर्यात्- ॐ अद्येत्यादि अस्य शिशोः वैधृति जनन संसूचित सर्वारिष्ट शान्ति द्वारा श्री परमेश्वर प्रीत्यर्थ वैधृति शान्तिमहं करिष्ये। तत्र दिक् रक्षणादि देवतास्थापनादिकमग्निस्थापनान्तं सर्वं पूर्ववदेव कुर्यात्॥ ततोस्थंडिलस्य ऐर्शान्यं दिशिपीठं निर्माय तत्र कलशस्थापन विधिना कलशस्थाप्य कलशोपरि वरुणादि कलशस्य देवानां पूजयेत्। ततः स्थंडिलस्य पूर्वस्यां पीठोपरि श्वेतवस्त्रं प्रसार्य तदुपरि व्रीहिं निक्षिप्य पुनः तदुपरि वस्त्रं प्रसार्य तदुपरि तण्डुलं क्षिपेत्। तदुपरि वस्त्रं प्रयार्य पुनः तिलराशिं कृत्वा वस्त्रं प्रसार्य पञ्चवर्ण तण्डुलैः अष्टदलं विरच्य तन्मध्ये कलशं संस्थाप्य तत्र अधिदेवता प्रत्यधिदेवता तथा च प्रधान मूर्तीनामग्न्युत्तारण पूर्वक प्राण प्रतिष्ठां कृत्वा स्थापनं कुर्यात्। यथा- 'नमस्ते रुद्र' इति मन्त्रेणावाह्य 'ॐ रुद्र' रुद्राय नमः इत्यनेन पूजयेत्। तत् दक्षिणे- 'ॐ आकृष्णेन' इति सूर्यम् आवाह्य ॐ सूर्याय नमः इत्यनेन पूजयेत्। तदुत्तरे (वामेवा) 'ॐ इमन्देवाः' इति मन्त्रेण सोममावाह्य ॐ सोमाय नमः इत्यनेन पूजयेत्। तत्पश्चाद्- मूर्तिं कलशञ्च स्पृष्ट्वा रुद्रसूक्तम्, अप्रतिरथ सूक्तम्, इन्द्रसूक्तम् त्र्यम्बकम् मन्त्रांश्च विप्राः जपेयुः। ततः कुशकण्डिकां पात्रासादनादिकं च कृत्वा ग्रहहोमान्तं पर्यन्तं पूर्ववत् कार्यम्। ततो प्रधानं रुद्रं समिदाज्यचरुद्रव्यैः अष्टोत्तरशतं आहुतिं दद्यात्। ततः सूर्य, चन्द्र मन्त्रेणापि यथाशक्तिं आहुतिं दद्यात्। पुनः त्र्यम्बकमिति मन्त्रेण

अष्टोत्तरशतं जुहुयात्। ततः पूर्ववत् बलिः पूर्णाहुति वसोर्धारा, देवानां विसर्जनमभिषेकादिकं ब्राह्मणं भोजनम् सर्वं पूर्ववत् कुर्यात्।

॥ इति वैधृति शान्ति॥

## ॥ अथ त्रिक प्रसवशान्ति॥

शुभमुहूर्त्ते यजमान सपत्नीको स्नानं कृत्वा शुद्धवस्त्र धौतवस्त्रं परिधाय भद्रासनोपरि उपविश्याचम्य स्वस्तिवाचनादि पूर्ववत् कुर्यात्। हस्ते जलमादाय संकल्पं कुर्यात्- ॐ अद्येत्यादि° - मम सुतत्रयजन्मानन्तरं कान्य जनन कन्यात्रयजन्मानन्तरं पुत्र जन्म सूचितसर्वारिष्ट निवृत्ति द्वारा श्रीपरमेश्वर प्रत्यर्थं त्रिकप्रसव शान्तिकर्माहम् करिष्ये। तत्रादौ गणेश पूजनं, नवग्रहादि पूजनं च करिष्ये। पूर्ववत् सर्व मण्डलाधिष्ठातृ देवानां पूजनं विधाय सविधि पञ्च कलशं स्थापनं कुर्यात्। तत्र पूर्वस्यां दिशि कुम्भं संस्थाप्य तस्योपरि ताम्रमयी पात्रे स्वर्णनिर्मित ब्रह्मण प्रतिमा अग्न्युत्तारण प्राण प्रतिष्ठां कृत्वा षोडशोपचारेण पूजयेत्। तत्र 'ॐ ब्रह्मजज्ञानं' इति मन्त्रस्य जपकरणार्थं ब्रह्मणमेकं वृणुयात्। दक्षिणदिशि पूर्ववत् कलशं स्थाप्य तस्योपरि स्वर्णमयी विष्णुं प्रतिमा प्रतिष्ठाप्य षोडशोपचारेण सम्पूयेत्। तत्र 'इदं विष्णु°' इति मन्त्रस्य जप करणार्थमेकं ब्रह्मणं वृणुयात्।

ततः पश्चिमी दिशिः - पूर्ववदेव कलशं संस्थाप्य तस्योपरि स्वर्णमयी इन्द्र प्रतिमा ताम्रपात्रे अग्न्युत्तरण प्राण प्रतिष्ठां विधाय षोडशोपचारेण पूजयेत्। तत्र 'ॐ त्रातारमिन्द्रं' इति मन्त्रस्य जपकरणार्थमेकं ब्रह्मणं वृणुयात्।

उत्तरदिशि- उपरोक्त विधिना कुम्भं संस्थाप्य तस्योपरि ताम्रपत्रनिधाय तस्योपरि स्वर्ण निर्मित ईश प्रतिमा प्राण प्रतिष्ठां कृत्वा षोडशोपचारेण पूजयेत्। तत्र 'ॐ तमीशानं' इति मन्त्रस्य जपकरणाँ ब्रह्मणमेकं वृणुयात्।

ततः चुतुः कलशमध्ये अष्टदलोपरि कलशं संस्थाप्य तत्र ताम्रपात्रोपरि स्वर्णमयी रुद्र प्रतिमाग्न्युत्तारणपूर्वक प्राण प्रतिष्ठां विधाय षोडशोपचारेण पूजयेत्। तत्रादि 'ॐ नमस्ते रुद्रमि'ति मन्त्रस्य जपकरणार्थमेकं ब्रह्मणं वृणुयात्॥

ब्रह्मण वरणसंकल्पः - ॐ अद्येत्यादि॰ पूर्वप्रतिज्ञातार्थ सिद्ध्यर्थं क्रियमाण त्रीतरशान्त्यङ्गत्वेन शुभ फल प्राप्त्यर्थं अमुक मन्त्रस्य ब्रह्मणद्वारां युग्मसहस्त्रजपं कारयितुमेभि वरणद्रव्यैः अमुक गोत्रममुक शर्माणं ब्रह्मणं त्वामहं वृणे॥

तत्पश्चात्- कुशकण्डिका अग्निस्थापनादि पूर्ववत् कुर्यात् ॐ प्रजापतये स्वाहेत्यारभ्य नवग्रहहोमान्तं सर्वम् पूर्ववत् ज्ञेयम्। ततः ब्रह्मा, विष्णुः, ईश, इन्द्र, रुद्रञ्च प्रत्येकं तिल मिश्रित चरुभिः अष्ठोत्तरशत संख्याहुतिं तथा जपदशांशेन च होमं कृत्वा स्विष्टकृत् होम, पूर्णाहुति वसोर्धारा पूर्ववदेव ज्ञेयम्। अत्र सतिसम्भवे श्रीसूक्तेनापि जुहुयात्।

ततः - पूर्वस्थापित कलशानां जलं एक पात्रे निधाय विप्राः भद्रासने उपविष्टं ससुतं सपत्नीकं यजमानोपरि मूलशान्ति प्रकरणोक्ताभिषेक मन्त्रेण 'ॐ योऽसौ शक्तिधरो' इत्यादिना अभिषेकं कुर्यात्॥ अभिषेकानन्तं यजमानः गंगाजल मिश्रित जलेन तीर्थोदकेन वा स्नानं कुर्यात्॥ ततः पादप्रहारेण मृद्माण्डं स्फोटयेत्। नूतन वस्त्रं परिधाय आर्द्रवासांसि नापिताय दत्वा आचमनं कुर्यात्। ततः शान्तिपाठ पूर्वकमधोद्वारेण बालक निष्कासनं कुर्यात्। तदनन्तरं स्वर्ण निर्मित तद्भावे यज्ञीयकाष्ठ निर्मित गजपृष्ठोपरि बालकस्य स्नानं कारयित्वा छत्रं शिरसि धारयेत्। तत्र मन्त्रः -

ॐ आतपत्र पवित्राणां नृपाणां कीर्तिर्वधनम्।

पाहि मां सुदृढच्छत्रं सागरामृतसंभव॥

ततः शिशुं त्रिवारं चुम्बयेत्। ततः छायापात्र दान, अन्नत्रयदान,

धातुत्रयदान, तिलपात्रदानञ्च कुर्यात्। ततः देवविसर्जनं ब्रह्मणभोजनञ्च सर्वं पूर्ववत् ज्ञेयम्।

॥ इति त्रिक प्रसवशान्ति॥

## ॥ अथ कृष्णचतुर्दशीशान्ति प्रयोगम्॥

पूर्वं सुनिश्चिते शुभे मुर्हूत्ते शिशुं सहित सपत्नीक यजमान नित्यक्रियां विधाय (स्नानादिकं) कृत्वा शुद्धासानोपरि उपविश्य आचम्य, दिक्रक्षणादिञ्च कृत्वा, स्वस्तिवाचनञ्च कुर्यात्।

ततः संकल्पः - ॐ अद्येत्यादि॰ पूर्वप्रतिज्ञातार्थं अस्य कुमारस्य (बालकस्य वा) कृष्णचतुर्दशी जनन तत् पित्रादि सम्बन्धि अरिष्टदोष परिहारार्थं (शान्त्यर्थञ्चा) शुभफलप्राप्त्यर्थं श्री गणेशाम्बिका पूजनं पूर्वकं कृष्णचतुर्दशीशान्ति कर्माहं करिष्ये। ततः सर्वपूजनं पूर्ववत्।

ततः वरुण कलशं संस्थाप्य (तस्याधः) तस्य समीपे चतुर्भिः कलशैः सह मध्येऽपि कुम्भं संस्थापयेत्। तत्र मण्ये कुम्भं स्थाप्य तस्योपरि 'ॐ नमस्ते रुद्रमन्यव' इति मन्त्रेण रुद्रमावाह्य ॐ रुद्राय नमः इत्यनेन सम्पूजयेत्: ततः अश्वत्थप्लक्षपलाशखदिर समित् चरु : आज्यभाषतिलसर्षप मिश्रित चरुभिः (रुद्रमन्त्रेण) त्र्यम्बकमिति वा अष्टोत्तरशतं जुहुयात्। शेष पूर्ववत् ज्ञेयम्॥

॥ इति कृष्णचतुर्दशीशान्ति॥

## ॥ अथ दर्शशान्तिः प्रयोगम्॥

प्रातः स्नानादिकं कृत्वा नूतन वस्त्रं परिधाय शुद्धासनोपरि उपविश्याचम्य आत्मशुद्धि, आसनशुद्धि, स्वसितवाचनादि पूर्ववदेव कुर्यात्। ततः हस्ते जलमादाय संकल्पं कुर्यादनेन- ॐ अद्येत्यादि॰ पूर्वप्रतिज्ञातार्थं अस्य बालकस्य दर्श तिथौ जनन तत् पित्रादि सम्बन्धिन अरिष्टदोष निवारणार्थं सूर्यादिनवग्रह पूजनं पूर्वकं दर्शशा शान्ति

कर्माहं करिष्ये। तत्रादौ निर्विघ्नतयापिरसमाप्ति हेतवे गणेशाम्बिका, गौर्यादिषोडश मातृका, दिव्यादिचतुष्ठी योगिनी, नवग्रहादि पूजनञ्च करिष्ये। इति संकल्पयेत्। ततः ईशान कोणे कलशं संस्थाप्य तस्योपरि वरुणमावाह्य लब्धोपचारेण पूजयेत्। ततः कलशस्य पश्चिमे हरित्, रक्त, पीत, ताम्र, कृष्ण तण्डुलैः मडमण्डलं विरच्य तत्र कलश स्थापन पिधिना कलशं स्थापयेत्। कलशोपरिपूर्णपात्रमपि स्थापयेत्। ततो न्यग्रोध, उदुम्बर, अश्वत्थ, चूत वृक्षाणां मूलत्वक्पल्लवांश्च कलशे निक्षिप्य। कलशेपरि मध्ये पितृन् दक्षिणे चन्द्रं वामे च सूर्यं सुवर्णरजतताम्रमयान् प्रतिष्ठाप्य पूजयेत्। सर्वपूजनं विधाय कुशकण्डिक, अग्नि स्थापनादि, अग्निपूजनं सर्वम् पूर्ववत् कुर्यात्। होमे समित् चरु आज्याहुतिभिः पितृभ्यः, चन्द्राय १०८, सूर्याय नम स्वाहा १०८। अष्टोत्तरशतं जुहुयात् अन्य सर्वम्, पूर्णाहुति, विसर्जनमभिषेक पर्यन्तं अग्रलिखितानुसारेण कर्तव्य॥

॥ इति दर्शशान्तिः ॥

## ॥ अथ यमल जनन शान्ति विधिः ॥

अथातो यमलजनेन प्रायश्चिर्त्तियस्य भार्या विकृतिं प्रसवेत् पूर्णे दशाहे द्वादशाहे वा चतुर्णां क्षीर वृक्षाणां कषायम् उपसंहरेत्। प्लक्षवटोदुम्बराश्वथशमी देवदारु गौरसर्षपाः तेषां मिश्रमापो हिरण्यं दूर्वाङ्कुरैः सपल्लवैरष्टौ कलशान प्रपूर्य सर्वौषधीं क्षिपेत्। स्वस्तिवाचनं, गणेशादि पूजनं पूर्ववदेव कृत्वासशिशु सपत्नीक यजमानं स्नापयेत्।

तत्र मन्त्राः – 'ॐ आपोहिष्ठा' इति तिसृभिः, 'ॐ कयानश्चित्रा' इति द्वाभ्यां, 'ॐ त्रातारमिन्द्र' इति पञ्चैन्द्रेण, 'ॐ इमं वरुणम्' इति पञ्चवरुणेन, 'इदंमापः' 'अपाधम्' इत्यादिना स्नापयित्वा नूतन वस्त्रं परिधायालंकृत्य दम्पती शुद्धासनोपरि कुशासनोपरि वा उपविश्य तत्र मारुतं स्थालीपाकं श्रपयित्वा

आज्यभागाविष्ट्वाऽऽज्याहुतीजुहोति। पूर्वोक्तैः स्नानमन्त्राभिः स्थालीपाकेन होमयेत्। ॐ अग्नये स्वाहा, सोमाय स्वाहा, पवमानाय स्वाहा, पावकाय स्वाहा, मारुताय स्वाहा, मरुताय स्वाहा, मरुद्भ्यः स्वाहा, यमाय स्वाहा, अन्तकाय स्वाहा, मृत्यवे स्वाहा, ब्रह्मणे स्वाहा, अग्नये स्विष्टकृते स्वाहेति। ततः संस्त्रवप्राशनादिकर्म शेषं पूर्ववत् एव ज्ञेयम्॥

॥ इति यमल शान्तिः ॥

## ॥ मूलादि शान्ति समीक्षाः ॥

ज्येष्ठान्तेधटिका चैव मूलादौ धटिकाद्वयम्।
अमूलमूलत्वाहुर्जातं तत्र विवर्जयेत्॥ १ ॥
न बाला हन्ति पितरं मूलर्क्षे मातरं तथा।
मूलजाश्वशूरं हन्ति व्यालजा श्वशुराऽङ्गनाम्॥ २ ॥
माहेन्द्रजाऽग्रजं हन्ति देवरं तु द्विदेवजा।
तत्र शान्तिः पुष्कला चेत्तर्हि दोषो न कश्चन॥
मुख्यं कालं प्रवक्ष्यामि शान्ति होमस्य यत्नतः॥ ३ ॥
जातस्य द्वादशाहे वा जन्मर्क्षे वा शुभे दिने।
समाष्टके द्वादशाब्दे कुर्यात् शान्तिकमादरात्॥ ४ ॥
दिनक्षये व्यतीपाते व्याधाते विष्टिवैधृतौ।
शूले गण्डेऽतिगण्डे च परिधे यमघण्टके॥ ५ ॥
कालदण्डे मृत्युयोगे दग्धयोगे सुदारुणे।
तस्मिन् गण्डदिने प्राप्ते प्रसूतिर्यदि जायते॥
विचार्य्य तत्र दैवज्ञः शान्तिं कुर्य्याद्यथाविधि॥ ६ ॥
पूषाश्विनौ गुरौ सार्पं मघा-चित्रेन्द्रमूलभे।

एषु ऋक्षेषु जातस्य कुर्यात् गोजननं तथा॥ ७॥
पित्रारिष्टे सुतारिष्टे मात्रारिष्टे तथैव च।
सर्वारिष्ट विनाशाय यदुक्तं ज्यौतिषार्ण वे॥ ८॥
कुमारजन्मकाले तु व्यतीपातश्च वैधृति।
संक्रमश्च रवेस्तत्र जातो द्रारिद्रयकारकः॥
शान्तिश्च पुष्कला कार्या तत्र दोषो न कश्चन॥ ९॥
सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि।
मातापित्रोः कुलस्यापि तदाऽनिष्टं महद्भवेत्॥ १०॥
ज्येष्ठनाशो धने हानिर्दुःखं च सुमहद्भवेत्।
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने॥ ११॥
आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरस्सरम्।
ब्रह्मविष्णुमहेशेन्द्र प्रतिमाः स्वर्णतः कृताः॥ १२॥
पूजयेत् धान्यराशिस्थ कलशोपरि संस्थिताः।
पञ्चमे कलशे रुद्र पूजयेत् रुद्रसंख्यया॥ १३॥

## परिशिष्ट भाग

## ॥ अप्रतिरथ सूक्तम्॥

ॐ आशुः शिशना वृषभो न भीमो घनाघनः क्षोभणश्चर्षणी नाम्।
संक्रन्दनोऽनिमिष एकवीरः शतर्ठ०सेना अजयत्साकमिन्द्रः॥ १॥
संक्रन्दनेनाऽनिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना।
जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा॥ २॥
स इषुहस्तैः स निषङ्गिभिर्वशी सर्ठस्त्रष्टा स युध इन्द्रो गणेन।
सर्ठ०सृष्टजित्सोमपा बाहुशर्ध्युग्रधन्वा प्रतिहिताभिरस्ता॥ ३॥

बृहस्पते परिदीया रथेन रक्षोहा मित्राँअपबाधमानः।
प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम्॥ ४॥
बलविज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः।
अभिवीरो अभिसत्त्वा सहोजा जैत्रमिन्द्र रथमातिष्ठ गोवित्॥ ५॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा।
इमर्ठ०सजाता अनु वीरयध्वमिन्द्रर्ठ० सखायो अनु सर्ठ०रभध्वम्॥ ६॥
अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकर्ठ०सेना अवतु प्र युत्सु॥ ७॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥ ८॥
इन्द्राय वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतार्ठ०शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयता मुदस्थात्॥ ९॥
उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनार्ठ०सि।
उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः॥ १०॥
अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु।
अस्माकं वीरा उत्तरे भवन्त्वस्माँ२॥
उ देवा अवता हवेषु॥ ११॥
अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि।
अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम्॥ १२॥
अवसृष्टा परापत शरव्ये ब्रह्मसर्ठ०शिते।
गच्छामित्रान्प्रपद्यस्व मामीषां कंचनोच्छिषः॥ १३॥
प्रता जयता नर इन्द्रो वः शर्म यच्छतु।
उग्रा वः सन्तु बाहवोऽनाधृष्या यथा सथ॥ १४॥

असौ या सेना मरुतः परेषामभ्यैति न ओजसा स्पर्धमाना।
तां गूहत तमसाऽपव्रतेन यथामी अन्यो अन्यं न जानन्॥ १५॥
यत्र बाणाः संपतन्ति कुमारा विशिखा इव।
तत्र इन्द्रो बृहस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु॥ १६॥
मर्माणि ते वर्मणा छादयामि सोमस्त्वा राजाऽमृतेनानुवस्ताम्।
उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवामदन्तु॥ १७॥

## ॥ रुद्रसूक्तम्॥

ॐ नमस्ते रुद्र मन्यव उतो त इषवे नमः॥
बाहुभ्यामुत ते नमः॥ १॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि॥ २॥
यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे।
शिवां गिरित्र तां कुरु मा हिꣳसीः पुरुषं जगत्॥ ३॥
शिवेन वचसा त्वा गिरिशाच्छा वदामसि।
यथा नः सर्वमिज्जगदयक्ष्मꣳ सुमना असत्॥ ४॥
अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक्।
अहींश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्योऽधराचीः परा सुव॥ ५॥
असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः।
ये चैनꣳ रुद्रा अभितो दिक्षु श्रिताः सहस्रशोऽवैषाꣳहेड ईमहे॥ ६॥
असौ योऽवसर्पति नीलग्रीवो विलोहितः।
उतैनं गोपा अदृश्रन्नदृश्रन्नुदहार्यः स दृष्टो मृडयाति नः॥ ७॥
नमोऽस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे।

उभाभ्यां देव सवितः पवित्रेण सवेन च।
मां पुनीहि विश्वतः॥ ७॥
वैश्वदेवी पुनती देव्या...स्माभिमा बह्वयस्तन्वो वीतपृष्ठाः।
तया मदन्तः सधमादेषु वयठं० स्याम पतयो रयीणाम्॥ ८॥
॥ इति पवमानसूक्तम्॥

## ॥ पुरुषसूक्तम्॥

ॐ सहस्त्रशीर्षा पुरुषः सहस्त्राक्षः सहस्त्रपात्।
स भूमिं सर्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥ १॥
पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्।
उतामृतत्वस्येशानो यदन्नेनातिरोहति॥ २॥
एतावानस्य महिमातो ज्यायाँश्च पूरुषः।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि॥ ३॥
त्रिपादूर्ध्व उदैपुरुषः पादोऽस्येहाभवत् पुनः।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि॥ ४॥
ततो विराडजायत विराजो अधि पूरुषः।
स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः॥ ५॥
तस्माद्यज्ञात् सर्वहुतः संभृतं पृषदाज्यम्।
पशूंस्तांश्चक्रे वायव्यानारण्या ग्राम्याश्च ये॥ ६॥
तस्माद्यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत॥ ७॥
तस्मादश्वा अजायन्त ये के चोभयादतः।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः॥ ८॥

तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः।
तेन देवा अयजन्त साध्या ऋषयश्च ये॥ ९॥
यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्।
मुखं किमस्यासीत्किं बाहू किमूरू पादा उच्येते॥ १०॥
ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳪं शूद्रो अजायत॥ ११॥
चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत।
श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत॥ १२॥
नाभ्या आसीदन्तरिक्षᳪं शीर्ष्णो द्यौः समवर्तत।
पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ२॥ अकल्पयन्॥ १३॥
यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥ १४॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृताः।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुम्॥ १५॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥ १६॥

॥ पुरुषसूक्तं सम्पूर्णम्॥

## ॥ श्रीकनकधारा स्तोत्रम्॥

अङ्गं हरेः पुलकभूषणमाश्रयन्ती भृङ्गाङ्गनेव मुकुलाभरणं तमालम्।
अङ्गीकृताखिलविभूतिरपाङ्गलीला माङ्गल्यदाऽस्तु मम मङ्गलदेवतायाः॥ १॥
मुग्धा मुहुर्विदधती वदने मुरारेः प्रेमत्रपाप्रणिहितानि गतागतानि।

माला दृशोर्मधुकरीव महोत्पले या सा मे श्रियं दिशतु सागरसम्भवायाः ॥ २ ॥

विश्वामरेन्द्रपदविभ्रमदानदक्षमानन्दहेतुरधिकं मुरविद्विषोऽपि।
ईषन्निषीदतु मयि क्षणमीक्षणार्धमिन्दीवरोदरसहोदरमिन्दिरायाः ॥ ३ ॥

आमीलिताक्षमधिगम्य मुदा मुकुन्दमानन्दकन्दमनिमेषमनङ्गतन्त्रम्।
आकेकरस्थितकनीनिकपक्ष्मनेत्रं भूत्यै भवेन्मम भुजङ्गशयाङ्गनायाः ॥ ४ ॥

बाह्वन्तरे मधुजितः श्रितकौस्तुभे या हारावलीव हरिनीलमयी विभति।
कामप्रदा भगवतोऽपि कटाक्षमाला कल्याणमावहतु मे कमलालयायाः ॥ ५ ॥

कालाम्बुदालिललितोरसि कैटभारेर्धाराधरे स्फुरति या तडिदङ्गनेव।
मातु समस्तजगतां महनीयमूर्तिर्भद्राणि मे दिशतु भार्गवनन्दनायाः ॥ ६ ॥

प्राप्तं पदं प्रथमतः किल यत्प्रभावान्माङ्गल्यभाजि मधुमाथिनि मन्मथेन।
मय्यापतत्तदिह मन्थरमीक्षणार्धं मन्दालसं च मकरालयकन्यकायाः ॥ ७ ॥

दद्याद्दयानुपवनो द्रविणाम्बुधारामस्मिन्नकिञ्चनविहङ्गशिशौ विषण्णे।
दुष्कर्मघर्ममपनीय चिराय दूरं नारायणप्रणयिनीनयनाम्बुवाहः ॥ ८ ॥

इष्टा विशिष्टमतयोऽपि यया दयार्द्रदृष्ट्या त्रिविष्टपपदं सुलभ लभन्ते।

दृष्टिः प्रहृष्टकमलोदरदीप्तिरिष्टां पुष्टिं कृषीष्ट मम पुष्करविष्टरायाः॥ ९॥

गीर्देवतेति गरुडध्वजसुन्दरीति शाकम्भरीति शशिशेखरवल्लभेति।

सृष्टिस्थितिप्रलयकेलिषु संस्थितायै तस्यै नमस्त्रिभुवनैकगुरोस्तरुण्यै॥ १०॥

श्रत्यै नमोऽस्तु शुभकर्मफलप्रसूत्यै रत्यै नमोऽस्तु रमणीयगुणार्णवायै।

शक्त्यै नमोऽस्तु शतपत्रनिकेतनायै पुष्ट्यै नमोऽस्तु पुरुषोत्तमवल्लभायै॥ ११॥

नमोऽस्तु नालीकनिभाननायै नमोऽस्तु दुग्धोदधिजन्मभम्यै।

नमोऽस्तु सोमामृतसोदरायै नमोऽस्तु नारायणवल्लभायै॥ १२॥

सम्पत्कराणि सकलेन्द्रियनन्दनानि साम्राज्यदानविभवानि सरोरुहाक्षि।

त्वद्वन्दनानि दुरिताहरणोद्यतानि मामेव मातरनिशं कलयन्तु मान्ये॥ १३॥

यत्कटाक्षसमुपासनाविधिः सेवकस्य सकलार्थसम्पदः।

संतनोति वचनाङ्गमानसैस्त्वां मुरारिहृदयेश्वरीं भजे॥ १४॥

सरसिजनिलये सरोजहस्ते धवलतमांशुकगन्धमाल्यशोभे।

भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ १५॥

दिग्घस्तिभिः कनककुम्भमुखावसृष्टस्वर्वाहिनीविमलचारु-

जलप्लुताङ्गीम्।

प्रातर्नमामि जगतां जननीमशेषलोकाधिनाथगृहिणीममृताब्धिपुत्रीम्॥ १६॥

कमले कमलाक्षवल्लभे त्वं करुणापूरतरङ्गितैरपाङ्गैः।

अवलोकय मामकिञ्चनानां प्रथमं पात्रमकृत्रिमं दयायाः॥ १७॥

स्तुवन्ति ये स्तुतिभिरमूभिरन्वहं त्रयीमयीं त्रिभुवनमातरं रमाम्।

गुणाधिका गुरुतरभाग्यभागिनो भवन्ति ते भुवि बुधभाविताशयाः॥ १८॥

॥ श्रीभगवत्पादशङ्करविरचितं कनकधारास्तोत्रं सम्पूर्णम्॥

## ॥ श्रीसूक्तम्॥

ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम्।

चन्द्रां हिरण्यमयीं लक्ष्मीं जातवेदो ममा वह॥ १॥

तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।

यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम्॥ २॥

अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम्।

श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम्॥ ३॥

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम्।

पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम्॥ ४॥

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।

तां पद्मनेमिं शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि॥ ५॥

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः।

तस्य फलानि तपसा नुदन्तु मायान्तरा याश्च बाह्या अलक्ष्मीः॥ ६॥

उपैतु मां देवसखः कीर्तिश्च मणिना सह।

प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिं वृद्धिं ददातु मे॥ ७॥

क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।

अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात्॥ ८॥

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।

ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम्॥ ९॥

मनसः काममाकूतिं वाचः सत्यमशीमहि।

पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः॥ १०॥

कर्दमेन प्रजा भूता मयि संभव कर्दम।

श्रियं वासय मे कुले मातरं पद्ममालिनीम्॥ ११ ॥

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।

नि च देवीं मातरं श्रियं वासय मे कुले॥ १२॥

पक्वां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्।

सूर्यां हिरणमयीं लक्ष्मीं जातवेदो ममा वह॥ १३॥

आर्द्रां पुष्करिणीं यष्टिं सुवर्णां हेममालिनीम्।

चन्द्रां हिरणमयीं लक्ष्मीं जातवेदो ममा वह॥ १४॥

तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्।

यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम्॥ १५॥

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।

सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत्॥ १६॥

पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि।

विश्वप्रिये विश्वमनोनुकूले त्वत्पादपद्मं मयि सं नि धत्स्व॥ १७॥

पद्मानने पद्मऊरु पद्माक्षि पद्मसंभवे।

तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम्॥ १८॥

अश्वदायि गोदायि धनदायि महाधने।

धनं मे जुषतां देवि सर्वकामाश्च देहि मे॥ १९॥

पुत्रपौत्रं धनं धान्यं हस्त्यश्वाश्वतरै रथैः।

प्रजानां भवसि माता आयुष्मन्तं करोतु माम्॥ २०॥

धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः।

धनमिन्द्रो बृहस्पतिर्वरुणो धनमुच्यते॥ २१॥

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा।

सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः॥ २२॥

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।

भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपन्॥ २३॥

सरसिजनिलये सरोजहस्ते धवतरांशुकगन्धमाल्यशोभे।

भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम्॥ २४॥

विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्।

लक्ष्मीं प्रियसखीं देवीं नमाम्यच्युतवल्लभाम्॥ २५॥

महालक्ष्मीं च विद्महे विष्णुपत्नीं च धीमहि।

तन्नो लक्ष्मीः प्रचोदयात्॥ २६॥

आनन्दः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः।

ऋषयः श्रियः पुत्राश्च श्रीर्देवीर्देवता मताः॥ २७॥

ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः।

भयशोकमगस्तापा नश्यन्तु मम सर्वदा॥ २८॥

श्रीर्वर्चस्वमायुष्यमारोग्यमाविधात्पमानं महीयते।

धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ २९ ॥

॥ ऋग्वेदोक्तं श्रीसूक्तं सम्पूर्णम् ॥

## ॥ दिग्रक्षणमन्त्राः ॥

ॐ रक्षोहणं वलगहनं वैष्णवीमिदमहं तं वलगमुत्किरामि यं मे निष्ट्यो मममात्यो निचरवानेदमहं तं वलगमुत्किरामि ये मे समानो यमसमानो निचखानेदमहं तं वलगमुत्किरामि यं मे सबन्धुर्यमसबन्धुर्निचखानेदमहं तं वलगमुत्किरामि यं मे सजातो यमसजातो निचखानोत्कृत्यां किरामि ॥ १ ॥

रक्षोहणो वो वलगहनः प्रोक्षामि वैष्णवान् रक्षोहणो वे वलगहनोऽवनयामि वैष्णवान् रक्षोहणो वो वलगहनोऽवस्तृणामि वैष्णवान् रक्षोहणौ वां वलगहनौ पर्यूहामि वैष्णवी वैष्णवमसि वैष्णवाः स्थ ॥ २ ॥

रक्षसां भागोऽसि निरस्तꣳ रक्ष इदमहꣳ रक्षोऽभितिष्ठातीदमहꣳ रक्षोऽवबाध इदमहꣳ रक्षोऽधमं तमो नयामि। घृतेन द्यावापृथिवी प्रोर्णुवाथां वायोवेस्तोकानामग्निराज्यस्य वेतु स्वाहा स्वाहाकृते ऊर्ध्वनभसं मारुतं गच्छतम् ॥ ३ ॥

रक्षोहा विश्वचर्षणिरभि योनिमयोहते।

द्रोणे सधस्थमासदत् ॥ ४ ॥

कृणुष्व पाजः प्रसितिं न वृथ्वीं याहि राजेवामवाँऽइभेन।

तृष्वीमनु प्रसितिं द्रूणानोऽस्तासि विश्य रक्षसस्तपिष्ठैः ॥ ५ ॥

## ॥ भद्रसूक्तम् ॥

ॐ आ नो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः।

देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्तताम्।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे॥ २॥
तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्त्रिधम्।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत्॥ ३॥
तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः।
तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम्॥ ४॥
तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयम्।
पूषा नो यथा वेदसामसद् वृधे रक्षिता पायुरदब्धः स्वस्तये॥ ५॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥ ६॥
पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह॥ ७॥
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः॥ ८॥
शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम्।
पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः॥ ९॥
अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः।
विश्वे देवा अदितिः पञ्च जना अदितिर्जातमदितिर्जनित्वम्॥ १०॥
तम्पत्नीभिरनुगच्छेम देवाः पुत्रैर्भ्रातृभिरुतवा हिरण्यैः।
नाकङ्गृभ्णानां सुकृतस्य लोके तृतीये पृष्ठे अधिरोचने दिव॥ ११॥
आयूष्यम्वर्च्चस्वꣳ रायस्पोष मौद्भिदमू।
इदꣳ हिरण्यम्वर्चस्वञ्जैत्राशविशतादुमाम्॥ १२॥
द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः

शान्तिः। वनस्पतयः शान्तिर्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्वं
शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि॥ १३॥
यतो यतः समीहसे ततो नोऽअभयङ्कुरु।
शन्नः कुरुप्रजाभ्योऽभयन्नः पशुभ्यः॥ १४॥

॥ इति परिशिष्ट भाग॥

# विविध-प्रकरण

## ।। सिद्धि योगाः ।।

शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता जया कुजे।
गुरौ पूर्णा च संयोगात् सिद्धियोगाः प्रकीर्त्तिताः ।।

अर्थ- शुक्रवार को नन्दा ( १ । ६ । ११ ) बुधवार भद्रा ( २ । ७ । १२ ) मंगलवार को जया ( ३ । ८ । १३ ) शनिवार रिक्ता ( ४ । ९ । १४ ) गुरुवार पूर्णा ( ५ । १० । १५ ) संयोग होने से सिद्धियोग होता है। यह यात्रा के लिए शुभदायक है।

## ।। अमृत योगाः ।।

चन्द्रार्कयो भवेत् पूर्णा कुजे भद्रा जया गरौ।
शनिचन्द्रजयोर्नन्दा मृगौ रिक्ताऽमृताह्वया ।।

अर्थ- रविवार और सोमवार पूर्णा ( ५ । १० । १५ ) मंगलवार को भद्रा ( २ । ७ । १२ ) गुरुवार को जया ( ३ । ८ । १३ ) शनिवार और बुधवार नन्दा ( १ । ६ । ११ ) और शुक्रवार रिक्ता ( ४ । ९ । १४ ) अमृत योग होता है। यह यात्रा के लिए शुभदायक है।

## ।। मृत्युयोगाः ।।

आदित्यभौमयोर्नन्दा भद्रा भार्गवचन्द्रयोः।
बुधे जया गुरौ रिक्ता शनौ पूर्णा मृतिप्रदा ।।

अर्थ- रविवार मंगलवार को नन्दा ( १ । ६ । ११ ) शुक्रवार और सोमवार को भद्रा ( २ । ७ । १२ ) बुधवार जया ( ३ । ८ । १३ ) गुरुवार

को रिक्ता ( ४ । ९ । १४ ) और शनिवार पूर्णा ( ५ । १० । १५ ) संयोग होने से मृत्युयोग होता है। इसमें यात्रा करना शुभदायक नहीं है।

## ॥ दग्ध योगाः ॥

द्वादशी रविवारे च सोमे चैकादशी तथा।
भौमे तथैव दशमी तृतीया बुधवासरे॥

अर्थ- रविवार को द्वादशी, सोमवार को एकादशी, मंगलवार दशमी, बुधवार को तृतीया, गुरुवार को षष्ठी, शुक्रवार को द्वितीया, शनिवार को सप्तमी होने से दग्धयोग होता है। यह दग्धयोग शुभकार्य में त्याज्य माना है। मतान्तर से मंगलवार पञ्चमी, शुक्रवार को अष्टमी, शनिवार को नवमी भी दग्धयोग होता है।

## ॥ पर्वदिनानि ॥

चतुर्दश्यष्टमी कृष्णा ह्यमावास्या च पूर्णिमा।
पुण्यानि पञ्चपर्वाणि संक्रान्तिदिनयस्य च॥

अर्थ- कृष्णपक्ष की चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा और रवि संक्रान्ति दिवस ये पाँच पर्व कहे गये हैं। यह यात्रादि शुभकार्य में वर्जित है।

## ॥ पञ्चक नक्षत्र ज्ञानम् ॥

पञ्चमानि धनिष्ठातः पञ्चकं परिकीर्त्यते।
गृहार्थं तृणकाष्ठानां संग्रहं वर्जयेत्सुधीः॥

अर्थ- धनिष्ठा, शतभिषा, पूर्वभाद्रपद, उत्तरभाद्रपद, रेवती ये पाँच नक्षत्र पञ्चक कहे जाते हैं। इन नक्षत्रों में यथा सम्भव तृण, काष्ठ के घर बनाना, लकड़ी काटना, दक्षिण दिशा में यात्रा करना पलंगादि का निर्माण करना तथा शुभ कार्यों में विद्वानों द्वारा वर्जित

बतलाया गया है।

## ॥ पञ्चक परिहारः ॥

वस्वादौ शतमे मध्ये पूर्वादौ चोत्तरान्त के।
पञ्च पञ्च घटी त्याज्या रेवती सकलं त्यजेत्॥

अर्थ- धनिष्ठा के आदि का, शतभिषा के मध्य का, पूर्वभाद्रपद के आदि का, उत्तरभाद्रपद के अन्त का पाँच-पाँच घटी आवश्यक में त्याज्य माना है परन्तु रेवती का समस्त मान त्याज्य है।

## भद्रा विचार॥

शुक्ले पूर्वार्धेऽष्टमीपञ्चदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे।
कृष्णेऽन्त्यार्धेस्यात्तृतीयादशम्योः पूर्वे भागे सप्तमी शम्भु तिथ्योः॥

अर्थ- शुक्लपक्ष की अष्टमी और पूर्णिमा के पूर्वार्ध में और चतुर्थी एकादशी के उत्तरार्ध में भद्रा रहती है। कृष्णपक्ष की सप्तमी चतुर्दशी के पूर्वार्ध में और तृतीया दशमी के परार्ध में भद्रा रहती है।

## ॥ भद्रा परिहार॥

तिथिपूर्वार्धजा भद्रा रात्रौ शुभकरी तथा।
परमागगता भद्रा दिने चेच्छुमदा स्मृता॥

अर्थ- भद्रा तो सवर्था त्याज्य है, किन्तु आवश्यक कार्य में पूर्वार्ध की भद्रा रात्रि में और परार्ध की भद्रा दिन में हो तो शुभ कार्य कर सकते हैं।

## ॥ भद्रा वास विचार॥

कुम्भकर्कद्वये मर्त्ये स्वर्गेऽब्जेऽजात्त्रे लिगे।

स्त्रीधनुर्जूकनक्रेऽथो भद्रा तत्रैव तत्फलम्॥

अर्थ- कुम्भ, मीन, कर्क, सिंह इन चार राशियों में चन्द्रमा के रहने से भद्रा मृत्युलोक में, मेष, वृष, मिथुन, वृश्चिक इन चारों राशियों में चन्द्रमा रहने से स्वर्गलोक में, कन्या, धनु, तुला, मकर इन चारों राशियों में चन्द्रमा के रहने से भद्रा पाताल लोक में रहती है।

स्वर्गे भद्रा शुभं कार्यं पाताले च धनागमः।

मृत्युलोके यदा विष्टिः सर्व कार्यं विनाशनी॥

अर्थ- स्वर्गलोक में भद्रा के रहने से शुभ कार्य करना शुभ है, पाताल लोक में रहने से धन की वृद्धि होती है, मृत्युलोक में भद्रा के रहने से सभी कार्य का विनाश होता है। मृत्युलोक में स्थित भद्रा शुभ कार्यों के लिए वर्जित माना है।

## ॥ राशिवशेन चन्द्रदिशा ज्ञान॥

मेषे च सिंहे धनुषीन्द्रभागे मृगास्यकन्यावृषमेषु याम्ये।

युग्मे तुला कुम्भदिशि प्रतीच्यां कर्कालिमीने दिशि चोत्तरस्याम्॥

अर्थ- मेष, सिंह, धनु में पूर्व, वृष, मकर, कन्या में दक्षिण, कुम्भ, तुला, मिथुन में पश्चिम और कर्क, वृश्चिक, मीन में उत्तर दिशा में चन्द्रमा का वास होता है।

## ॥ दिक्शूल॥

शन्नी चन्द्रे त्यजेत् पूर्वां दक्षिणाञ्च दिशं गुरौ।

सूर्ये शुक्रे पश्चिमाञ्च बुधे भौमे तथोत्तराम्॥

अर्थ- शनिवार, सोमवार को पूर्व दिशा, गुरुवार को दक्षिण दिशा, रविवार, शुक्रवार को पश्चिम दिशा, बुध और मंगलवार को उत्तर दिशा में यात्रा करना निषेध है।

## ॥ दिक्शूल परिहार ॥

सूर्यवारे धृतं प्राश्य गच्छेत् सोमे पयस्तथा।
गुडं मंगलवारे च बुधवारे तिलानपि॥
गुरुवारे दधि प्राश्य शुक्रवासरे यवानपि।
माषान् भुक्त्वा शनेर्वारे शूलदोषोपशान्तमे॥

अर्थ- रविवार में घृत, सोमवार में दूध, मंगलवार में गुड़, बुधवार में तिल, गुरुवार में दही, शुक्रवार में यव, शनिवार में माष (उड़द) भोजन करके यात्रा करने से दिक्शूल जन्य-दोष नहीं होता।

## ॥ अग्निवास विचार ॥

सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्नि वासः।
सौख्याय होमे शशि युग्मशेषे प्राणार्थ नाशौ दिवि नागलोके॥

अर्थ- तिथि में एक जोड़कर उसमें रविवारादि से गिनकर दिन संख्या जोड़ दें और चार से भाग देने पर यदि शेष शून्य या तीन बचे तो अग्निवास पृथिवी पर, उसमें हवन करने से सौख्य होता है। यदि शेष १ बचे तो अग्निवास आकाश में, २ शेष बचे तो पाताल में अग्निवास होता है। उसमें हवन करने से प्राण और धन का नाश होता है।